तैलेनाभ्यञ्जमानस्तु धनायुर्भ्यां प्रहीयते ॥ २९१ ॥
अन्यायोपात्तवित्तस्य पतितस्य च वार्धुषेः ।
न स्नायादुदपानेषु स्नात्वा कृच्छ्रं समाचरेत् ॥ २९२ ॥
मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥ २९३ ॥
संक्रान्त्यां भानुवारे च सप्तम्यां राहुदर्शने ।
आरोग्यपुत्रमित्रार्थी न स्नायादुष्णवारिणा ॥ २९४ ॥
स गोहत्याकृतं पापं प्राप्नोत्येव न संशय ॥ २९५ ॥
षडोङ्कारं जपन्विप्रो गायत्रीं मनसा शुचिः ।
अनेकजन्मजैः पापैर्मुच्यते नात्र संशयः ॥ २९६ ॥
तिस्रो व्याहृतयः पूर्वषडोङ्कारसमन्विताः ।
पुनः संस्कृत्य चोङ्कारमन्त्रस्याद्यन्तयोस्तथा ॥ २९७ ॥
सौङ्कारचतुरावृत्य विज्ञेया सा शताक्षरा ।
शताक्षरां समावृत्य सर्ववेदफलं लभेत् ॥ २९८ ॥
एतया ज्ञातया नित्यं वाङ्मयं विदितं भवेत् ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥ २९९ ॥
यथा योधन (?) हस्तेभ्यो राज्यं गच्छति धार्मिकः ।
एवं तिलसमायुक्तं जलं प्रेतेषु गच्छति ॥ ३०० ॥
एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्कृत्वा जलाञ्जलिम् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ ३०१ ॥
इहजन्मकृतं पापमन्यजन्मकृतं च यत् ।
अङ्गारकचतुर्दश्यां तर्पयंस्तद्व्यपोहति ॥ ३०२ ॥
न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत् ॥ ३०३ ॥
पिबतो यत्पतेत्तोयं भोजने मुखनिःसृतम् ।
अभोज्यं तद्भवेदन्नं भोक्ता भुञ्जीत किल्बिषी ॥ ३०४ ॥
पीतावशेषितं कृत्वा ब्राह्मणः पुनरापिबेत् ।
त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः ॥ ३०५ ॥

स्मृतिरत्नाकरे ।

चण्डालादेस्तु संस्पर्शे वारुणं स्नानमेव हि ।

इतराणि तु चत्वारि यथायोग्यं स्मृतानि हि ॥ ३०६ ॥
मनुष्यतर्पणे चैव स्नाने वस्त्रादिपीडने ।
निवीतिस्तूभये विप्रस्तथा मूत्रपुरीषयोः ॥ ३०७ ॥
वस्त्रं त्रिगुणितं यस्तु निष्पीडयति मूढधीः ।
वृथा स्नानं भवेत्तस्य यच्चैवादशमाम्बुभिः ॥ ३०८ ॥
और्ध्वपुंड्रो मृदा धार्यो यतिना च विशेषतः ।
भस्मचन्दनगन्धादीन्वर्जयेद्यावदायुषा ॥ ३०९ ॥

निर्णयसिन्धौ ।

अर्धरात्रादधस्ताच्चेत्संक्रान्तिग्रहणं तदा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषभाक् ॥ ३१० ॥
एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥ ३११ ॥
पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपानयेऽधिकारी स्यात्पूर्वाभावे परः परः ॥ ३१२ ॥
जीवन्यदि समागच्छेद्धृतकुम्भे निमज्य च ।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥ ३१३ ॥
सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥ ३१४ ॥
तैलाभ्यङ्गो नार्कवारे न भौमे
नो संक्रान्तौ वैधृतौ विष्टिषष्ठयोः ।
पर्वस्वष्टम्यां च नेष्टः स इष्टः
प्रोक्तान्मुक्त्वा वासरे सूर्यसूनोः ॥ ३१५ ॥
स्नुषास्वस्रीयतत्पुत्रा ज्ञातिसंबन्धिबान्धवाः ।
पुत्राभावे तु कुर्वीरन् सपिण्डान्तं यथाविधि ॥ ३१६ ॥
श्राद्धं करिष्यन्कृत्वा वा भुक्त्वा वापि निमन्त्रितः ।
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥ ३१७ ॥
निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथुनं क्षुरम् ।
प्रमत्तानां च स्वाध्यायं क्रोधं शोकं तथानृतम् ॥ ३१८ ॥
मृन्मयं दारुजं पात्रमयःपात्रं च यद्भवेत् ।
राजतं दैविके कार्ये शिलापात्रं च वर्जयेत् ॥ ३१९ ॥
अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदैहिकम् ।

प्रायश्चितमसौ स्मार्तं कृत्वाग्नीनादधीत च ॥ ३२० ॥
द्वादशाहव्रतं चर्यात्रिरात्रमथवास्य तु ।
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥ ३२१ ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥ ३२२ ॥
क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः ।
गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥ ३२३ ॥
दशाहस्यान्तरो यस्य गङ्गातोयेऽस्थि मज्जति ।
गयायां मरणं यादृक् तादृक्फलमवाप्नुयात् ॥ ३२४ ॥
द्वादशेऽहनि विप्राणामाशौचान्ते च भूभुजाम् ॥ ३२५ ॥
वैश्यानां तु त्रिपक्षादाथथवा स्यात्सपिण्डनम् ॥ ३२६ ॥

शूद्रकमलाकरे ।

विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ।
स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ॥ ३२७ ॥
संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते ।
संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः ॥ ३२८ ॥
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयन्निशाम् ॥ ३२९ ॥
भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥ ३३० ॥
शालके तत्सुते चैव सद्यः स्नानेन शुध्यति ॥ ३३१ ॥
षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ॥ ३३२ ॥
शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
अपरो नापितः प्रोक्तः शूद्रधर्माधिकोऽपि सः ॥ ३३३ ॥

व्यवहारमयूखे ।

प्रमादान्नाशितं दाप्यः समं हि द्रोहनाशितम् ।
न तु दाप्यो हृतं चोरैर्दग्धमूढं जलेन वा ॥ ३३४ ॥

श्राद्धमयूखे ।

शुक्लाः समुन्नताः श्रेष्ठास्तथापद्मोत्पलानि तु ।
गन्धरूपोपयुक्तानि ऋतुकालोद्भवानि च ॥ ३३५ ॥
जपादिकुसुमं झिण्टी रूपिका सुकुरुण्टिका ।
पुष्पाणि वर्जनीयानि श्राद्धे कर्माणि नित्यशः ॥ ३३६ ॥

प्रायश्चित्तमयूखे ।

पतितान्त्यश्वपाकेन संसृष्टा चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ ३३७ ॥
प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये त्र्यहमेव तु ।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमेव च ॥ ३३८ ॥

विवादभङ्गार्णवे ।

ब्रह्मदायागतां भूमिं हरेयुर्ब्राह्मणीसुताः ।
गृहं द्विजातयः सर्वे तथा क्षेत्रं क्रमागतम् ॥ ३३९ ॥

---

( बृहन्मनुः )

मिताक्षरायाम् ।

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥ ३४० ॥

पाराशरमाधवीये ।

समानोदकभावस्तु निवर्तेताचतुर्दश ।
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते ॥ ३४१ ॥
आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् ॥ ३४२ ॥
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् ।
आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ॥ ३४३ ॥
तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा ॥ ३४४ ॥

स्मृतिरत्नाकरे ।

त्रयोदश्यां तु सप्तम्यां चतुर्थ्यामर्धरात्रतः ।
अर्वाङ् नाध्ययनं कुर्यादिच्छेत्तस्य परायणम् ॥ ३४५ ॥
रात्रौ यामद्वयादर्वाग्यदि पश्येत्त्रयोदशीम् ।
सा रात्रिः सर्वकर्मघ्नी शङ्कराराधनं विना ॥ ३४६ ॥

निर्णयसिन्धौ ।

असंबन्धा भवेन्मातुः पिण्डेनैवोदकेन वा ।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या ॥ ३४७ ॥
श्वशूद्रपतिताश्चान्त्या मृताश्चेद्द्विजमन्दिरे ।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा ॥ ३४८ ॥

दशरात्राच्छुनिमृते मासाच्छूद्रे भवेच्छुचिः ।
द्वाभ्यां तु पतिते गेहमन्त्यो मासचतुष्टयात् ॥ ३४९ ॥
अत्यन्तं वर्जयेद्देहमित्येवं मनुरब्रवीत् ॥ ॥ ३५० ॥

शूद्रकमलाकरे ।

जीवञ्जातो यदि ततो मृतः सूतकमेव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥ ३५१ ॥

प्रायश्चित्तमयूखे ।

मातुर्मातृगमने पितुर्मातृगमने तथा ।
एतास्त्वकामतो गत्वा द्विजश्चान्द्रायणं चरेत् ॥ ३५२ ॥

विवादभङ्गार्णवे ।

देशनामनदीभेदान्निकटेऽपि भवेद्यदि ।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयंभुवा ॥ ३५३ ॥
दशरात्रेण या वार्ता यत्र न श्रूयतेऽथवा ।
गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः ॥ ३५४ ॥
एकोदरे जीवति तु सापत्नो न लभेद्धनम् ।
स्थावरेऽप्येवमेव स्यात्तदभावे लभेत वै ॥ ३५५ ॥

---

परिशिष्टं समाप्तम् ।

---

# मनुस्मृतिश्लोकानामकाराद्यनुक्रमणी ।

मनुस्मृतेः श्लोकानुक्रमणी समाप्ता ।



